7-

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 843.



# तैत्तिरीयकृष्णयजुःसंहिता ॥

## माधवाचार्य्यविरचितवेदार्थप्रकाशाख्यभाष्यसहिता

---

# THE SAṂHITÁ OF THE BLACK YAJUR VEDA,

WITH THE

COMMENTARY OF MÁDHAVA ÁCHÁRYA.

EDITED BY

PAṆḌIT SATYAVRATA ÇÁMAS'RAMÍ.

FASCICULUS XXXVII.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1894.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. KEGAN PAUL, TRENCH, TRÜBNER & CO., LD.

Paternoster House, Charing Cross Road, London, W. C., and Mr. Otto Harrassowitz, Bookseller, Leipzig, Germany.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series.*

| Title | | Rs. | As. |
|---|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each | ... Rs. | 1 | 8 |
| *Agni Puráṇa, (Text) Fasc. 2–14 @ /6/ each ... ... | ... | 4 | 14 |
| Aitareya Áraṇyaka of the Rig Veda, (Text) Fasc. 1–5 @ /6/ each | ... | 1 | 14 |
| Aṇu Bháshyam, (Text) Fasc. 1–2 ... ... ... | ... | 0 | 12 |
| Aphorisms of Sáṇḍilya, (English) Fasc. 1 ... ... | ... | 0 | 6 |
| Ashtasáhasriká Prajnapáramitá, (Text) Fasc. 1–6 @ /6/ each | ... | 2 | 4 |
| Áśvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... | ... | 1 | 14 |
| Avadána Kalpalatá, (Sans. and Tibetan) Vol. I, Fasc. 1–4; Vol. II. Fasc. 1–2 @ 1/ ... ... ... ... ... | ... | 6 | 0 |
| *Bhámati, (Text) Fasc. 2–8 @ /6/ each ... ... | ... | 2 | 10 |
| Brahma Sútra, (English) Fasc. 1 ... ... ... | ... | 0 | 12 |
| Brihaddevata (Text) Fasc. 1–4 @ /6/ each ... ... | ... | 1 | 8 |
| Brihadharma Puráṇa, (Text) Fasc. 1–4 @ /6/ each ... | ... | 1 | 8 |
| Brihataranyaka Upanishad (English) Fasc. 2–3 @ /6/ each | ... | 0 | 12 |
| Chaitandya-Chandrodaya Náṭaka, (Text) Fasc. 2–3 @ /6/ each | ... | 0 | 12 |
| *Chaturvarga Chintamaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–9 @ /6/ each ... ... | ... | 19 | 8 |
| *Chhándogya Upanishad, (English) Fasc. 2 ... ... | ... | 0 | 6 |
| *Hindu Astronomy, (English) Fasc. 2–3 @ /6/ each ... | ... | 0 | 12 |
| Kála Mádhaba, (Text) Fasc. 1–4 @ /6/ each ... ... | ... | 1 | 8 |
| Kátantra, (Text) Fasc. 1–6 @ /12/ each ... ... | ... | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. 1–14 @ /12/ each ... | ... | 10 | 8 |
| Kúrma Purana, (Text) Fasc. 1–9 @ /6/ each ... ... | ... | 3 | 6 |
| *Lalita-Vistara, (Text) Fasc. 3–6 @ /6/ each ... ... | ... | 1 | 8 |
| Ditto (English) Fasc. 1–3 @ /12/ each ... | ... | 2 | 4 |
| Madana Párijáta, (Text) Fasc. 1–11 @ /6/ each... ... | ... | 4 | 2 |
| Manutiká Sangraha, (Text) Fasc. 1–3 @ /6/ each ... | ... | 1 | 2 |
| *Márkaṇḍeya Puráṇa, (Text) Fasc. 4–7 @ /6/ each ... | ... | 1 | 8 |
| Márkaṇḍeya Puráṇa, (English) Fasc. 1–3 @ /12 each ... | ... | 2 | 4 |
| *Mímáṃsá Darṣana, (Text) Fasc. 3–19 @ /6/ each ... | ... | 6 | 6 |
| Nárada Smṛiti, (Text) Fasc. 1–3 @ /6/ ... ... | ... | 1 | 2 |
| Nyayavártika, (Text) Fasc. 1–2 ... ... ... | ... | 0 | 12 |
| *Nirukta, (Text) Vol. I, Fasc. 4–6; Vol. II, Fasc. 1–6; Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... ... | ... | 8 | 10 |
| *Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. 2–5 @ /6/ each ... ... ... ... | ... | 1 | 8 |
| Nyayabindutika, (Text) ... ... ... ... | ... | 0 | 10 |
| Nyaya Kusumánjali Prakarana (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ /6/ each ... ... ... | ... | 3 | 0 |
| Pariśishṭa Parvan, (Text) Fasc. 1–5 @ /6/ each... ... | ... | 1 | 14 |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 843, 859, 868, 885, 902, 909, 937, 942 & 952.

---

# THE SANHITA' OF THE BLACK YAJUR VEDA

WITH THE COMMENTARY OF

MA'DHAVA A'CHA'RYA

EDITED BY

PAṆḌIT SATYAVRATA SA'MAS'RAMI'

*Associate Member of the Asiatic Society of Bengal; Editor, Author, Commentator, Annotator, Compiler, Translator and Publisher of different Vedic works, &c., &c.*

## VOL. VI.

## KAṆḌA VI & VII.

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1899.

# ॥ सम्पादकोक्तिः ॥



अथ तैत्तिरीयसंहितेति व्याख्यास्यामः। "मन्त्रब्राह्मणयोर्वेदनामधे-
यम्"—इत्याहापस्तम्बः ( य. प. सू. ३४.)। तत्र मन्त्रग्रन्थाना मेव संहितेति
नामान्तरम्। तासां संहितानां हि बहुप्राचीनत्वात् कालभेद-देशभेद-व्यक्ति-
भेदादिभिरध्ययनाध्यापनयोरुच्चारणादिभेदाः पाठभेदाश्च सम्पन्नाः, पाठन्यूनाति-
रिक्तता च किञ्चित् सञ्जाता, आचार्याणां प्रकृतिवैषम्यात् स्वस्वदेशकालाद्य-
नुरोधाच्च अनुष्ठेयभेदाः तत्प्रयोगभेदाश्च सम्पन्नाः; अत एवैकैकोऽपि वेदो बहु-
शाखत्व मापन्नः। तदेवोदाहृतं प्राचीनभाषितं चरणषट्कं षड्गुरुशिष्येण—
"एकविंशत्यध्वयुक्त मृग्वेद मृषयो विदुः। सहस्राध्वा सामवेदो यजुरेकशता-
ध्वकम्। नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्"—इति। 'अध्वा, देवता,
गतिः, शाखा इति पर्यायवाचकाः'—इति च तत्रोक्तं तेनैव। पातञ्जले
महाभाष्येऽप्युक्त मेवमेव। तथाहि पस्पशाह्निके—"एकशत मध्वर्युशाखाः,
सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः"—इति।
चरणव्यूहे तु किञ्चित् पार्थक्य मपि। तद्यथा—"ऋग्वेदस्य ० ० ० शाखाः
पञ्चविधा भवन्ति। आश्वलायनी शाङ्खायनी शाकला वाष्कला माण्डुकेया चेति"—
इति। "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र चरका नाम द्वादशभेदा
भवन्ति। चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारायणीया
वारायणीया वार्त्तान्तवेयाः श्वेताश्वतरा औपमन्यवः पाताण्डिनीया मैत्रायणीया-
श्चेति। तत्र मैत्रायणी नाम सप्तभेदा भवन्ति। मानवा दुन्दुभाश्चैकेया वाराहा
हारिद्रवेयाः श्यामाः श्यामायणीयाश्चेति। ० ० ०। वाजसनेया नाम सप्तदशभेदा
भवन्ति। जावाला गौधेयाः काण्वा माध्यन्दिनाः शापीयास्तापनीयाः कापालाः
पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरीया वैधेया वैनेया औधेया
गालवा वैजकाः कात्यायनीयाश्चेति। ० ० ०। तैत्तिरीयका नाम द्विभेदा
भवन्ति। औख्या खाण्डिकेयाश्चेति। खाण्डिकेया नाम पञ्चभेदा भवन्ति।
आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति"—इत्यादि।
विष्णुपुराणादौ तु शाखानां सङ्ख्या नामानि च पृथक् पृथगेव, तदल मिहानति-
प्राचीनानां भ्रमविजृम्भितानां मिव तेषा मवतारणेन। चरणव्यूहादावपि
पाठभेदाः सन्त्येवेति।

इत्थं बहुशाखत्वेऽप्येकैकस्य वेदस्य, एकैकस्याः शाखाया अध्ययनेनैव भवेदेवाधीत एकैको वेदः; सर्वास्वेवैकवेदीयशाखासु संहितायाः प्रायोऽभेदात्। किञ्चिन्मन्त्रन्यूनातिरिक्तेन, किञ्चित्पाठव्यतिक्रमेण, किञ्चिदुच्चारणभेदेन, किञ्चिदनुष्ठानविधिपार्थक्येन च न भवेद्वस्तुतो विभिन्नत्वम्; जागर्त्त्येव ह्येष न्यायः—'एकदेशविकृत मनन्यवत् (पा० सू० १. १. ७२. भा०)'—इति। भवत्येव हि छिन्नपुच्छे शुनि श्वेतिव्यवहारो लोके। अत एव सायणाचार्यादिभिरेकैकैव शाखा व्याख्याता, तथामानि च सर्ववेदव्याख्याने आत्मनः कृतकृत्यतेति। एवं "वेदः कृत्स्नोऽधिगन्तव्यः (२. १६५.)"—इति, "षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवैदिकं व्रतम् (३. १.)"—इति, "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् (३. २.)"—इति च मनुवचनानि सङ्गच्छन्ते; शाखानां मन्त्रगतप्रकृतपार्थक्ये हि कथं सम्भवेन्नामाध्ययनं द्वादशस्वेवाब्देषु सहस्रशाखस्य सामवेदस्य? ततस्तादृशस्मृतिवचनाना मुन्मत्तप्रलपितत्व मेव प्रसज्येतेति। अतोऽत्रैवमेवावधार्यम्,— वेदशाखाभेदो न मन्वाद्यध्यायभेदतुल्यः, प्रत्युत भिन्नकाललिखितानां भिन्नदेशीयाना मेकग्रन्थीयाना मपि बहुतरादर्शपुस्तकानां यथा भवत्येव पाठादिभेदः, प्रायस्तथैवेति। वेदाना मनुश्रवत्वं, बहुप्राचीनत्वं, शाखाप्रवर्त्तकानां प्रवचने किञ्चित् स्वातन्त्र्यं चेह वीजानि। अथाप्यत्र संशयश्चेत् कस्याप्येकस्य वेदस्य कयोरपि शाखयोराद्यन्तपाठसन्दर्शनेनैव तद्दूरोत्सारणं सुकर मेवेति भवेन्निवृत्तः कोलाहलः।

परन्त्वेव मपि यजुर्वेदस्य वाजसनेय-तैत्तिरीययोः शाखयोरेवं मिथः पार्थक्य मुपलभ्यते, यत्तयोरुभयोः शुक्लत्वकृष्णत्वेऽमंसत प्राचीनाः। तथा च जावालादीनां सप्तदशवाजसनेयशाखानां शुक्लयजुरिति ख्यातिः; औख्यादीनां तैत्तिरीयाणान्तु षण्णां यजुःशाखानां कृष्णयजुरिति समाख्या चेति। ईदृशासदृशभेदकारणं शतपथश्रुत्यादितात्पर्यतोऽवगन्तव्यम्।

तथाहि—"आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते"—इति शत० ब्रा० १४. ९. ४. ३३। 'वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम्'—इति चाह तद्भाष्ये द्विवेदगङ्गः। तथा चेमानि पुराणवचनानि—

"वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्।
यैश्चीर्णं ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम्॥ ६१॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् कियत्।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्॥ ६२॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति॥ ६३॥

देवरातसुतः सोऽपि छर्दित्वा यजुषां गणम् ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥ ६४ ॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः ।
तैत्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥ ६५ ॥
याज्ञवल्क्यस्ततो ब्रह्मंश्छन्दांस्यधिगवेषयन् ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥

* * * * * *

एवं स्तुतः स भगवान् वाजिरूपधरो रविः ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥ ७३ ॥"

—इति भाग० पु० १२. ६ ।

सैषा कृष्णयजुर्वेदसंहिता तित्तिरिनाममहर्षिणा प्रोक्तेति तैत्तिरीयसंहितेत्युच्यते । तदाह भगवान् पाणिनिः—"तेन प्रोक्तम्, तित्तिरिवरतन्तुखण्डिकोखाच्छण्"—इति (४. ३. १०१, १०२)।

अत्रैतदपि ज्ञेयम्—तित्तिरिप्रमुखानां शाखाप्रोक्तृत्वेऽपि न तु तत्तच्छाखीयमन्त्राणां प्रोक्तृत्वम्; प्रतिमन्त्रर्षिसंवादव्याकोपात्। अस्ति हि सर्वेषा मेव मन्त्राणां पृथक्पृथगृषिसंवादः,—अयं मन्त्रोऽनेन ऋषिणा दृष्ट इति ।

अथापरमपि—तित्तिरिप्रोक्तैषैव शाखा क्रमात् षड्विधत्व मापन्ना औख्यादिनामतः षोढा प्रसिद्धिं गतेति तासां षण्णा मेव तैत्तिरीयत्वेऽपि औख्यनामिका आद्यैव तैत्तिरीयेति व्यपदिश्यते विशेषतः; यथा ऋग्वेदशाखानां पञ्चानामेव शाकलत्वेऽपि शैशिरीयाख्याद्यैव शाखा शाकलेति व्यपदिश्यते । तथाहि विकृतिकौमुद्याम्—

"शाकल्यस्य शतं शिष्या नैष्ठिकब्रह्मचारिणः ।
पञ्च तेषां गृहस्थास्ते धर्म्मिष्ठाश्च कुटुम्बिनः ॥
शिशिरो बाष्कलः साङ्ख्यो वात्स्यश्चैवाश्वलायनः ।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः ॥"—इति ।

तदेवं शैशिरीया, बाष्कलीया, साङ्ख्या, वात्स्या, आश्वलायनी चेत्यासां पञ्चाना मेव शाखानां शाकलत्वं गम्यते । अत एव "ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् । प्रमाण मनुवाकानां सूक्तैः शृणुत शाकलाः ॥"—इति-शौनकीयानुक्रमणी-व्याख्यानावसरे प्राह षड्गुरुशिष्यः— 'सर्वेषां (शैशिरीयादिपञ्चशाखाध्येतॄणाम्) शाकलत्व मुक्तम्'—इति । एव मपि चरणव्यूहादौ शैशिरीया शाखैव शाकलेति बुध्यतेऽस्माभिस्तथैव वैदिकप्रसिद्धेः ।

संहितालक्षणं तु पार्षदसूत्रादौ प्रसिद्धम्—'संहिता पदप्रकृतिः (पा० सू० १. २. १. १.)'–इति, 'वर्णाना मेकप्राणयोगः संहिता'–इति (य० वा० प्रा० १. १५८.), 'परः सन्निकर्षः संहिता (पा० सू० १. ४. १०९.)'–इति चैवमादि। 'मन्त्रा मननात्'–इति यास्कः। 'तेभ्यः (मन्त्रेभ्यः) हि अध्यात्माधिदैवाधियज्ञादिमन्तारो मन्यन्ते, तदेषां मन्त्रत्वम्'–इति तत्र दौर्गी वृत्तिः। तथाच 'मननहेतुर्मन्त्रः'–इत्येवं मन्त्रलक्षणं सम्पन्नं यास्कीयम्।

सिद्ध मित्थं तित्तिरिनाममहर्षिप्रोक्ता या औख्यापरपर्याया पदप्रकृतिभूता आद्या मन्त्रपेटिका, सैषा कृष्णयजुर्वेदीया "तैत्तिरीयसंहिता"–नामेति॥

अस्य खलु तैत्तिरीयवेदस्य वान्तरूपत्वप्रवादे प्रत्यक्षहेतुश्चाय मुपलभ्यते। यथा हि शाकसूपापूपादयः पृथक् पृथग् भक्षिता अपि वान्ताश्चेद् मिश्रिता एव दृश्यन्ते, एव मिह पृथक् पृथक् प्रसिद्धयोरपि मन्त्रब्राह्मणकाण्डयोरेकत्र समावेशः संलक्ष्यते;—मन्त्रपेटिकारूपे संहिताग्रन्थे हि बहूनि ब्राह्मणवाक्यान्याम्नातानि, तथा ब्राह्मणग्रन्थे च बहव एव मन्त्राः समाम्नाताः। वस्तुतो यथा ऋग्वेदस्य, शुक्लयजुषः, सामवेदस्य च संहिताब्राह्मणयोर्ग्रन्थयोः पार्थक्यं पाठमात्रत एवोपलभ्यते, न तथा अस्य। एतदीयसंहिताब्राह्मणग्रन्थयोर्न कोऽपि रचनागतविभेदो गम्यते; अपि नाम संहिताग्रन्थारम्भे मन्त्रश्रुतिः, ब्राह्मणग्रन्थारम्भे तु ब्राह्मणवाक्यश्रुतिरित्येवात्र ग्रन्थपरिचयबीजम्, गुरुपरम्परागताचार्यव्यपदेश एव च तत्पोषकः। अत एव मीमांसायाम् अभियुक्तानां व्यवहारत एव मन्त्रग्रन्थोऽयमिति निर्णेतव्य मिति सिद्धान्तितम् (मी० जै० २अ० १पा० ३२ सू० ७ अधि०)। कृष्णत्वप्रवादेऽपि स्यादिद मेव बीजम्। अत एव "आदित्यानीमानि शुक्लानि यजूंषि"–इत्यस्य व्याख्याने 'शुक्लानि शुद्धानि यद्वा ब्राह्मणेनामिश्रितमन्त्रात्मकानि'–इत्युक्तं द्विवेदगङ्गेन। बृहदारण्यकभाष्येऽप्येवमेवाह भगवता शङ्कराचार्येणेति।

तैत्तिरीयारण्यकग्रन्थस्तु तैत्तिरीयसंहिताभागैकदेश इति मन्तव्यम्, अन्यथामन्त्रब्राह्मणयोर्वेदनामधेय मित्यापस्तम्बीयवचनादीना मुन्मत्तप्रलापत्व मेतदारण्यकस्यावेदत्वं वा प्रसज्येत। तत्त्वतोऽरण्येऽध्येयत्व मेवारण्यकनामबीजम्, तत्तु मन्त्रेष्वपि सम्भवति, सम्भवति ब्राह्मणवाक्येष्वपि; तस्मात् सर्वा एवारण्यकग्रन्था मन्त्रब्राह्मणयोरन्यतरस्यांशविशेषा एव। तत्र क्वचित् मन्त्रग्रन्थस्यैकदेशः, यथा सामवेदे; क्वचिद् ब्राह्मणग्रन्थस्य, यथा शुक्ले यजुषि। "पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् (४. २. १२. पा० वा०)"–इत्येतद्वार्त्तिकभाष्ये 'आरण्यकोऽध्यायः'–इत्येकवचनान्तोदाहरणदर्शनादेकाध्याय एवारण्यकः सर्वत्रेति त्वपसिद्धान्तः; सति हि तथा गलेकुठारन्यायेन तद्वार्त्ति-

कोक्तानां न्यायादीनामपि एकैकत्व मेव स्यात् स्वीकार्यम्, न च तदिष्टं कस्य चिदपीति। तथाच यथा तत्र भाष्ये 'आरण्यकोऽध्यायः'—इत्युदाहृतम्, तथैव 'आरण्यकः ग्रन्थः, आरण्यको न्यायः, आरण्यको विहारः, आरण्यको मनुष्यः, आरण्यको हस्ती'—इमान्यप्युदाहरणानि भाषितानि। तत् किं मेतै-र्भाष्योदाहरणैः आरण्यकानां पथ-न्याय-विहार-मनुष्य-हस्तिना मेकैकत्व मेवा-वधार्यंत ? नो चेत्, इहापि नैवेति सुवचम्॥

सोऽयं कृष्णयजुर्वेदीयो मन्त्रभागग्रन्थः १८५४खृष्टाब्दे, डा० रोयर महोदयेन सम्पादयितु मारब्धः। ५९खृष्टाब्दतस्तत्र इ. वि. कवेल M. A. महोदयस्य साहाय्य मङ्गीकृतः। ६१खृष्टाब्दतस्तेन कवेलमहोदयेनैवैकेनास्य सम्पादन मुररीकृतम्। ततः ६६खृष्टाब्दे पण्डितरामनारायणविद्यारत्नमहाशयस्य हस्तेऽप्येतत्सम्पादनभारो न्यस्तः। आगते तु ६८खृष्टाब्दे महामहोपाध्याय-महेशचन्द्रन्यायरत्नस्याधिकारं गत मेतत्सम्पादनम्। तेन हि बहुकर्मणा तत आरभ्याष्टाविंशतिहायनेष्वस्य पञ्चदश खण्डाः (२२—३६) सम्पादिताः। ततो लब्धाधिकारेण मयाद्यैतत्सम्पादनं समापित मित्यलम्॥

सप्तकाण्डात्मकस्यास्य ग्रन्थस्यान्त्यकाण्डद्वयं मया सम्पादितम्। तत्र मत्पूर्वसम्पादकैः सम्पादितानि पुस्तकान्येवावलम्बनीकृतान्यथापरञ्चैकं मुम्बई-मुद्रितं मूल मवलम्बितमिति।

अथात्र प्रक्षेपाद्याशङ्कानिवृत्त्यर्थं प्रत्यनुवाकान्ते प्रतिप्रपाठकान्ते चैकैकं पदगणनवाक्यं यथावत्स्वरसंयुत मेवाधीयते, तदपि मन्त्राद्याम्नान मिव प्रतिभाति। तद्यथा प्रथमकाण्डीय-प्रथमप्रपाठके प्रथमानुवाकाम्नानावसाने पठ्यत इदं वाक्यम्—"इषे त्रिचत्वारिꣳशत्"—इति। 'इषे'—इत्यारभ्य त्रिचत्वारिंशत् (४३) पदानीहानुवाके आम्नातानीति तदर्थः। तथा द्वितीयानु-वाकाम्नानावसाने—"सहस्रवल्शा अष्टात्रिꣳशच्च"—इति। एतस्य द्वितीयानु-वाकस्य पञ्चाशत्तमं पदं 'सहस्रवल्शा'—इति, ततोऽन्यान्यप्यष्टात्रिंशत् पदानीह सन्ति। ततश्चात्रानुवाके अष्टाशीतिपदान्याम्नातानीति बोधित मेतेन वाक्येन। तथा पञ्चमानुवाकाम्नानावसाने—"त्वा भाग एकादश च"—इति। एतस्य पञ्चमानुवाकस्य प्रथमं पञ्चाशत्तमं पदं 'त्वा'—इति, ततो द्वितीयं पञ्चाशत्तमं पदं 'भागः'—इति, ततोऽन्यान्यप्येकादश पदानीह सन्ति। ततश्चात्रानुवाके एकादशाधिकशतं पदान्याम्नातानीति बोधित मेतेन वाक्येन। एवं प्रथमप्रपाठ-काम्नानावसाने पठ्यत इदं वाक्यम्—"इषे दृꣳह भुवनमष्टाविꣳशतिः"—इति। अस्मिन् प्रपाठके 'इषे'—इत्यारभ्य पञ्चशतं पदानि, ततो 'दृꣳह'—इत्यारभ्य च पञ्चशतं पदानि, ततो 'भुवनम्'—इत्यारभ्य पञ्चशतं पदानि,

ततोऽन्यान्यपि अष्टाविंशतिः पदानि सन्ति । तदित्थ मेतत्प्रपाठकपदसङ्ख्या वस्वक्षिवाणेशमितेति (१५२८) बोधित मेतेन वाक्येन ।

प्रतिप्रपाठकावसाने तत्तत्प्रपाठकाम्नातानुवाकानां यथाक्रमेण प्रतीकपदान्यनूद्य परिगणना च विद्यते, तत्तदनुवाकपरिगणनवाक्यमपि सस्वर मेवाधीयते । तद्यथा—"(१) इषे त्वा, (२) यज्ञस्य, (३) शुन्धध्वं, (४) कर्मणे वां, (५) देवो, (६) ऽवधूतं, (७) दृष्टिः, (८) संवपाम्या, (९)-दर्दे, (१०) प्रत्युष्टं, (११) कृष्णोऽसि, (१२) भुवनमसि, (१३) वाजस्यो, (१४)-भावाँ चतुर्दश"—इति ।

एवं प्रतिकाण्डान्ते तत्तत्काण्डीयप्रपाठकानां प्रतीकपदानि समुल्लिख्य परिगणना च सस्वरं पठ्यते । तद्यथा सप्तमकाण्डान्ते—"(१) प्रजननं, (२) साध्याः, (३) प्रजवं, (४) बृहस्पतिर्, (५) गावः पञ्च"—इति । सप्तमे काण्डे पञ्च प्रपाठकाः सन्ति, तत्र तेषां यथाक्रमेणेमानि प्रजनन मित्यादीनि प्रतीकपदानीति तदर्थः ।

तथा ग्रन्थशेषे काण्डप्रतीकपरिगणनावाक्यं च सस्वर मधीयते । तद्यथा—"(१) इषे, (२) वायव्यं, (३) प्रजापतिर्, (४) युञ्जानः, (५) सावित्राणि, (६) प्राचीनवꣳशं, (७) प्रजननं सप्त"—इति । एतेन वाक्येनात्र तैत्तिरीयसंहितायां सप्त काण्डाः सन्ति, तेषां च काण्डानाम् 'इषे'—इत्यादीनि सप्त प्रतीकपदानीति बोध्यत इति सर्वतोवद्धानि तैत्तिरीयमन्त्रभागपदादीनीति ॥

अथ संहितापाठे सम्पादकेच्छाप्रयुक्तसन्धिविश्लेषस्यान्याय्यत्वं ६ भा० २१ पृ० ‡ टीप्पन्या मिङ्गितेन बोधितम्, तथा अनुवाकमध्ये "॥ १ ॥"—एवमादिसाङ्कपूर्णच्छेदचिह्नेन खण्डभेदानां विधानस्यावैदिक मिति ६ भा० ३४ पृ०* टीप्पन्यां सूचितं तत्तत्रैवालोच्यमिति ॥

अथैतद्भाष्यकारविषयेऽप्यस्ति किञ्चिद् वक्तव्यम् । कश्चिदाह यः खलु माधवाचार्यः स एव सायणाचार्य इति । तदेतन्मत माचारमाधवाद्युक्तपरिचयविरुद्ध मित्यश्रद्धेय मेव । तथा ह्याचारमाधवे, प्रायश्चित्तमाधवे, कालमाधवे, च भूमिकायाः षष्ठ-सप्तम-श्लोकाविमौ—

"श्रीमती जननी यस्य सुकीर्त्तिर्मायनः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥"—इति ।

नन्वेवं वेदभाष्याणां पुष्पिकासु सर्वत्रैव 'सायणाचार्यविरचिते माधवीये'—इति लेखात् द्विकर्त्तृकत्वबोधः कथं वार्यतेति चेत् ? न ; तत्र तत्र तथैव विवक्षितत्वात् । एकस्य हि आदेशकर्त्तृत्वेन कर्त्तृत्व मपरस्य स्वमस्तिष्कचालनेन

तदिति द्विकर्तृकत्वं न विरुद्धम् । अपि वा उभयोरतिस्नेहातिशय्यप्रकाशार्थं स्यात् तथा व्यवहारः । कस्य चिन्मते माधवाचार्य एव वेदभाष्याणां कर्त्ता ; "ये पूर्वोत्तरमीमांसे व्याख्यायातिसङ्ग्रहात्"—इत्युक्तेः । अतिसङ्ग्रहात् पूर्वोत्तर-मीमांसयोर्व्याख्याता हि माधव एव, न तु सायणः । एतन्मतन्त्वापातरमणीयमपि न विचारसहम् ; सर्वत्र पुष्पिकासु "सायणाचार्यविरचिते"—इत्युल्लेखात्, यज्ञतन्त्रसुधानिध्युपक्रमोक्तत्रयोदशचतुर्द्दशश्लोकविरोधाच्च । तथाहि—

"ते तपस्तेजसां राशिं माधीनं परमासने ।
सर्वज्ञं सायणाचार्यं पर्यपृच्छन् सभासदः ॥
अधीताः सकला वेदास्ते च दृष्टार्थगोचराः ।
त्वत्प्रणीतेन तद्भाष्यप्रदीपेन प्रणीयसा ॥"—इति ।

वस्तुत एतद्भाष्योपक्रमश्लोकेषु मुद्रिततृतीयश्लोकादनन्तरं लिपिकरप्रमा-दादित सर्वपुस्तकेष्वविद्यमानावपि स्त एवेमौ श्लोकौ—

"स प्राह नृपतिं राजन् सायणार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने ॥"—इति ।

श्लोकावेतौ आस्यायितिकपुस्तकालयीयैकस्मिन् जीर्णतमे ऽतिविशुद्ध-पुस्तके मयेक्षितौ, तैत्तिरीयप्रथमभागस्य सम्पादकीयलिपेष्टीप्पन्याञ्चोद्धृतौ दृश्येते । एतच्छ्लोकद्वयात्परभूतश्चैष श्लोकः स्यात् षष्ठः, योऽत्र मुद्रितश्चतुर्थः—

"ये पूर्वोत्तरमीमांसे व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥"—इति ।

अस्य का गतिरिति चेत्, उद्यतः सन् स्वमध्यमानुजेन सायणाचार्येण वेदार्थप्रकाशं कारयतीत्युह्य मित्यस्माकम् । एवं हि सायणाचार्यकृतान्येव सर्वाणि वेदभाष्याणीति सिद्धम् ।

एव मपि मत्सम्पादितैतत्खण्डानाञ्च मुखपृष्ठासु यन्मुद्रितं 'माधवा-चार्यविरचितवेदार्थप्रकाशाख्यभाष्यसहिता'—इति, तत्सर्वं पूर्वपूर्वसम्पादकलेखा-नुसारत एवेति बोध्यम् ; अन्यथा हि स्याद् ग्रन्थान्तरत्वप्रतीतिरिति ।

किञ्च वेदभाष्येषु तैत्तिरीयभाष्यस्यैव प्राथम्यं स्यादभ्युपगम्यम् ; ऋक्-संहिताभाष्याद्युपक्रमश्लोकादिपाठात्तथैवोपलब्धेः । तथाहि—

"आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदो, ऽथ हौत्रार्थं ऋग्वेदो व्याकरिष्यते ॥"—इति

ऋ० सं० भा० भू० ५ श्लो० ।

एतेन यजुर्भाष्यस्य प्राथम्ये विज्ञातेऽपि न ज्ञायते तत् शुक्लस्य यजुषः कृष्णस्य वेति। काण्वसंहिताभाष्योपक्रमणी-पञ्चमैकादशश्लोकपाठात्तु तदा-शङ्कापि भवति छिन्नमूला। तथाहि—

"ऋग्यजुस्सामवेदा ये व्याख्यातास्तेषु तद् यजुः।

कृष्णं शुक्ल मिति द्वेधा, तत् कृष्णं तैत्तिरीयकम् ॥ ५ ॥

*        *        *        *        *        *

व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ ११ ॥"—इति।

एवञ्च कण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातम्, तैत्तिरीयाख्यं कृष्ण-यजुरेव पूर्वं व्याख्यात मिति स्फुटम्। तत्रापि ब्राह्मणारण्यकयोर्व्याख्यानात् पुरैवैषा संहिता व्याख्यातेति च ध्रुवम्। तथाहि ब्राह्मणभाष्योपक्रमे—

"व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।

तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये ॥"—इति ५ श्लो०।

तथाचारण्यकभाष्ये—"व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।

तद्ब्राह्मणं च व्याख्यातं शिष्ट मारण्यकं ततः ॥"—इति ५ श्लो०।

"यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी"—इत्युक्तेस्तस्याचार्यस्य तैत्तिरीयशाखाध्येतृकुलजत्वमपि सुव्यक्त मिति शम् ॥

कलकत्ता (राजन्वती)। }
संवत् १९५६(१८९९)। }

श्रीसत्यव्रतशर्म्मा।
(सामश्रमी)

# सूचीपत्रम्

## तैत्तिरीयसंहितायाः षष्ठभागस्य ।

( तत्र )

## अथ सोमब्राह्मणं नाम षष्ठं काण्डम् ।

इह प्रपाठकाः षट् ।

प्रथमप्रपाठकस्य—

## द्वितीयप्रपाठकस्य—



---

## तृतीयप्रपाठकस्य—

---

चतुर्थप्रपाठकस्य—



---

पञ्चमप्रपाठकस्य—



---

षष्ठप्रपाठकस्य—

---

# अथ सोमकाण्डं नाम सप्तमं काण्डम् ।

## इह प्रपाठकाः पञ्च ।



### प्रथमप्रपाठकस्य—

* अत्रेदमालोच्यम्—"तां वराहो भूत्वाहरत्"—इति ।

## द्वितीयप्रपाठकस्य—

तृतीयप्रपाठकस्य—

---

## चतुर्थप्रपाठकस्य—

---

पञ्चमप्रपाठकस्य—

तत्र

॥ पूर्णमिति ॥

॥ षष्ठभागस्य सूचीपत्रं समाप्तम् ॥

---

॥ अथ ॥

# तैत्तिरीयसंहितायाः

## ( प्रथमादिसप्तकाण्डानां )

## ॥ मन्त्रसूची ॥

का = काण्डे, प्र = प्रपाठके, अ = अनुवाके, म = मन्त्रसङ्ख्या ।

भा = भागे, पृ = पृष्ठे ।



(७) यः खल्वेकादशभिरंशैरेको मन्त्रः, तस्य सप्तमोऽंश एषः । एवमन्यत्रापि ।

| मन्त्रः | का | प्र | अ | म | आ | पृ |
|---|---|---|---|---|---|---|
| अक्रन्ददग्निस्तनयन्निव द्यौः | ४ | २ | २ | ४ | ४ | १६६ |
| अक्षन्नमीमदन्त ह्यव प्रिया | १ | ८ | ५ | ९ | २ | ६६ |
| अक्षन् पितरोऽमीमदन्त | १ | ८ | ५ | १० | २ | ६६ |
| अगदं जानुभ्यां | ५ | ७ | १३ | ५ | ५ | ३४१ |
| अगन्देवान् यज्ञो नि देवीर्देवेभ्यो | ३ | ५ | ६ | ९ | ३ | ३४१ |
| अगन्म सुवः सुवरगन्म | १ | ६ | ६ | १ | १ | ८८७ |
| अग्न आयूꣳषि पवसे | १ | ३ | १४ | २३ | १ | ५७० |
| अग्न आयूꣳषि पवसे | १ | ४ | २९ | १ | १ | ६८३ |
| अग्न आयूꣳषि पवसे | १ | ५ | ५ | ७ | १ | ७९१ |
| अग्न आयूꣳषि पवसे | १ | ६ | ६ | ९ | १ | ८८८ |
| अग्न उदधे०—०भूयास्म | ५ | ५ | ९ | १ | ५ | १७० |
| अग्नये गृहपतये स्वाहा | १ | ८ | १५ | १२ | २ | १५६ |
| अग्नये गृहपतये स्वाहा | १ | ८ | १६ | २४ | २ | १६३ |
| अग्नये जुष्टं निर्वपति | १ | १ | ४ | ९ | १ | ८४ |
| अग्नये त्वा | १ | १ | ८ | ५ | १ | १३५ |
| अग्नये त्वा रायस्पोषदाव्ने | १ | २ | १० | ४ | १ | ३७० |
| अग्नये धामच्छदे पुरोडाशम् | २ | ४ | १० | ४ | २ | ५१६ |
| अग्नये रक्षोघ्ने स्वाहा | १ | ८ | ७ | ५ | २ | ९० |
| अग्नये वैश्वानराय स्वाहा | ४ | १ | ९ | ६ | ४ | ११३ |
| अग्नये वो जुष्टं प्रोक्षामि | १ | १ | ५ | ३ | १ | १०३ |
| अग्नये समनमत् पृथिव्यै | ७ | ५ | २३ | १–१० | ६ | ५५२ |
| अग्नये स्वाहा | १ | ८ | १३ | २० | २ | १३८ |
| अग्नये स्वाहा | ७ | १ | १२ | २ | ६ | २१४ |
| अग्नये स्वाहा | ७ | १ | १४ | १–११ | ६ | २१९ |
| अग्नये स्वाहा | ७ | १ | १६ | १–१६ | ६ | २२ |

१क मन्त्रैकत्वेन प्रयोज्ययोः ऋग्यजुषोराद्यो भाग एषः । एवमुत्तरत्रापि ।

| मन्त्रः | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| अषाढा नक्षत्रमापो देवता ... | ४ | ४ | १० | १८ | ४ | ४८२ |
| अषाढासि सहमाना ... ... | ४ | २ | ९ | ५ | ४ | २६५ |
| अष्टौ जुहोति चतस्रो वै दिशश्च ... | २ | ४ | ९ | ४ | २ | ५११ |
| असदन्न सुवीर्यमुत त्यदाश्वश्वियं ... | १ | ८ | २२ | १३ | २ | २२१ |
| असंमृष्टो ऽसि हव्यसूदः ... ... | १ | ३ | ३ | १२ | १ | ४६५ |
| असावि सोम इन्द्र ते ... ... | १ | ४ | ३९ | १क | १ | ६८५ |
| असितवर्णा हरयः सुपर्णा .. | ३ | १ | ११ | १९ | ३ | ६५ |
| असि यमो अस्यादित्यो ... ... | ४ | ६ | ७ | ३ | ४ | ६४६ |
| असुन्वन्तं यजमानमिच्छ ... ... | ४ | २ | ५ | १० | ४ | २ ३ |
| असुरः क्रीयमाणः ... ... ... | ४ | ४ | ९ | ६ | ४ | ४९६ |
| असुरात्तः ... ... ... ... | ४ | ४ | ९ | २९ | ४ | ४७६ |
| असौ यस्ताम्रो अरुण उत ... | ४ | ५ | १ | ७ | ४ | ५०९ |
| असौ योऽवसर्पति नीलग्रीवो ... | ४ | ५ | १ | ८ | ४ | ५१० |
| अस्तु श्रौषट् ... ... ... | ३ | ३ | ७ | २ | ३ | २०० |
| अस्तौविष्कन्दः ... ... ... | ४ | ३ | ७ | ४ | ४ | २५० |
| अस्मत्सखा त्वं देव सोम जागतेन | ३ | ३ | ३ | २२ | ३ | १७७ |
| अस्मद्दात्रा देवत्रा गच्छत ... ... | १ | ४ | ४३ | १० | १ | ६९३ |
| अस्माकमग्ने मघवत्सु ... ... | १ | ५ | ११ | ७ | १ | ८३२ |
| अस्माकमिन्द्रः समृतेषु ... ... | ४ | ६ | ४ | १० | ४ | ६०५ |
| अस्मिन् महत्यर्णवेऽन्तरिक्षे ... | ४ | ५ | ११ | २ | ४ | ५५२ |
| अस्मे इन्द्राबृहस्पती रयिं ... ... | ३ | ३ | ११ | ३ | ३ | २२३ |
| अस्मे चन्द्राणि ... ... ... | १ | २ | ७ | ३ | १ | ३५३ |
| अस्मे ज्योतिः ... ... ... | १ | २ | ७ | ७ | १ | ३.३ |
| अस्मे ते बन्धुः ... ... ... | १ | २ | ७ | ५ | १ | ३५३ |
| अस्मे देवासो वपुषे चिकित्सत ... | ३ | २ | ८ | १५ | ३ | १२७ |

## आ

## इ

| मन्त्रः | का | प्र | ख | म | आ | पृ |
|---|---|---|---|---|---|---|
| इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य | १ | ८ | १६ | १७ | २ | १६३ |
| इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं ... | १ | ७ | ७ | २ | १ | ९८९ |
| इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं ... | १ | ८ | १२ | १७ | २ | १२७ |
| इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं ... | १ | ८ | १५ | १ | २ | १५६ |
| इन्द्रस्य विष्णो वरुणस्य राज्ञ ... | ४ | ६ | ४ | ९ | ४ | ६०५ |
| इन्द्रस्य सदोऽसि ... ... ... | १ | ३ | १ | १५ | १ | ४४५ |
| इन्द्रस्य स्यूरसि ... ... ... | १ | ३ | १ | १८ | १ | ४४६ |
| इन्द्रस्याहं देवयज्ययेन्द्रियावी ... | १ | ९ | २ | २४ | २ | ८६० |
| इन्द्रस्याहमुज्जितिमनूज्जेषम् ... | १ | ६ | ४ | ९ | १ | ८७६ |
| इन्द्रस्यैकादशी ... ... ... | ५ | ७ | २१ | ११ | ५ | ३४९ |
| इन्द्रस्योरुमाविश ... ... ... | १ | २ | ७ | १० | १ | ३५४ |
| इन्द्राग्निभ्यां त्वा सयुजा युजा ... | ४ | ४ | ५ | १-८ | ४ | ४५५ |
| इन्द्राग्नियोरहं देवयज्यया ... ... | १ | ६ | २ | २३ | २ | ८६० |
| इन्द्राग्नियोरहमुज्जितिमनूज्जेषम्... | १ | ६ | ४ | ८ | १ | ८७६ |
| इन्द्राग्नियोर्भागधेयीः स्थ ... ... | १ | ३ | १२ | ४ | १ | ५५२ |
| इन्द्राग्नी अव्यथमानाम् ... ... | ४ | २ | ६ | १ | ४ | ३४३ |
| इन्द्राग्नी आगतꣳ सुतं ... ... | १ | ४ | १५ | १क | १ | ६४६ |
| इन्द्राग्नी द्यावापृथिवी ... ... | १ | २ | १ | १७ | २ | २७२ |
| इन्द्राग्नी नवतिं पुरो दासपत्नी ... | १ | १ | १४ | ३ | २ | २५५ |
| इन्द्राग्नी मे वर्चः कृणुतां सोमो ... | ३ | ३ | ३ | २४ | ३ | १७७ |
| इन्द्राग्नी रोचना दिवः ... ... | ४ | २ | ११ | १ | ४ | २९९ |
| इन्द्राग्नी रोचना दिवः ... ... | ४ | ३ | १३ | २८ | ४ | ३९९ |
| इन्द्राग्नी शिखण्डाभ्याम् ... ... | ५ | ७ | १५ | २ | ५ | ३४३ |
| इन्द्राणीमासु नारिषु ... ... | १ | ७ | १३ | ३ | १ | १०५९ |
| इन्द्राणीं सीक्षा ... ... ... | ५ | ७ | १६ | ७ | ५ | ३४४ |

## ऊ

ऋ

## ए

## ग

## घ

## च

| मन्त्रः | का । प्र । अ । म | भा | पृ |
|---|---|---|---|
| चन्द्रमसे स्वाहा ... ... ... | १ । ८ । १३ । ३६ | २ | १३८ |
| चन्द्रमा देवता ... ... ... | ४ । ३ । ७ । २८ | ४ | ३५० |
| चन्द्रासि ... ... ... ... | १ । २ । ५ । ६ | १ | ३३९ |
| चराचरेभ्यः स्वाहा ... ... ... | १ । ८ । १३ । ४१ | २ | १३८ |
| चरोस्त्वा पञ्चबिलस्य यन्त्राय ... | १ । ६ । १ । ७ | १ | ८५२ |
| चारुः कृपणकाशी कामो गन्धर्वं ... | ३ । ४ । ७ । ११ | ३ | २६३ |
| चित स्थ परिचित ऊर्ध्वचित ... | ४ । २ । ७ । ११ | ४ | २४० |
| चित स्थ प्रजामस्मै ... ... ... | १ । १ । ७ । १० | १ | १२७ |
| चित्तं विज्ञातमग्निं प्रयुजं स्वाहा ... | ४ । १ । ९ । ३ | ४ | ११३ |
| चित्तꣳ सन्तानेन भवं यक्ना रुद्रं ... | १ । ४ । ३९ । १ | १ | ६८४ |
| चित्तञ्च ... ... ... ... | ३ । ४ । ४ । १ | ३ | २५४ |
| चित्तं मन्याभिः ... ... ... | ५ । ७ । १४ । ३ | ५ | ३४२ |
| चित्तिं जुहोमि मनसा घृतेन ... | ५ । ५ । ४ । ८ | ५ | १४२ |
| चित्तिमचित्तिं चिनवद्वि विद्वान् | ५ । ५ । ४ । १३ | ५ | १४२ |
| चित्तिश्च ... ... ... ... | ३ । ४ । ४ । २ | ३ | २५४ |
| चित्पतिस्त्वा पुनातु ... ... ... | १ । २ । १ । १२ | १ | २७२ |
| चित्रज्योतिश्च... ... ... ... | १ । ८ । १३ । १४ | २ | १३८ |
| चित्रं देवानामुदगादनीकं ... ... | १ । ४ । ४३ । २ | १ | ६९३ |
| चित्रं देवानामुदगादनीकं ... ... | २ । २ । १२ । ६ | २ | ३७१ |
| चित्रं देवानामुदगादनीकं ... ... | २ । ४ । १४ । १५ | २ | ५३९ |
| चित्रं देवानामुदगादनीकं ... ... | २ । ५ । १२ । १४ | ३ | ६६७ |
| चित्रं देवानामुदगादनीकं ... ... | ३ । १ । ११ । ३२ | ३ | ९७ |
| चित्रा नक्षत्रमिन्द्रो देवता ... | ४ । ४ । १० । १२ | ४ | ४८२ |
| चित्रावसो स्वस्ति ते पारमशीय ... | १ । ५ । ५ । १४ | १ | ७९२ |
| चिदसि तया देवतयाङ्गिरस्वद् ... | ४ । २ । ४ । ११ | ४ | १८९ |

## त

## न

| मन्त्रः | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| नमः कूप्याय चावट्याय च ... | ४ | ५ | ७ | ११ | ४ | ५३४ |
| नमः कृत्स्नवीताय धावते ... | ४ | ५ | २ | १३ | ४ | ५१८ |
| नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च | ४ | ५ | ४ | ११ | ४ | ५२७ |
| नमः पर्णाय च पर्णशदाय च | ४ | ५ | ९ | १२ | ४ | ५४० |
| नमः पांसव्याय च रजस्याय च ... | ४ | ५ | ९ | ८ | ४ | ५४० |
| नमः पार्याय चावार्याय च | ४ | ५ | ८ | १३ | ४ | ५३७ |
| नमः पितृभ्यो अभि ये नो | ३ | २ | ८ | १३ | ३ | १३६ |
| नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च | ४ | ५ | ४ | १४ | ४ | ५२७ |
| नमः पूर्वजाय चापरजाय च | ४ | ५ | ६ | २ | ४ | ५३२ |
| नमः प्रतरणाय चोत्तरणाय च ... | ४ | ५ | ८ | १४ | ४ | ५३७ |
| नमः शङ्कराय च मयस्कराय च ... | ४ | ५ | ८ | १० | ४ | ५३७ |
| नमः शङ्गाय च पशुपतये च | ४ | ५ | ८ | ३ | ४ | ५३७ |
| नमः शम्भवे च मयोभवे च | ४ | ५ | ८ | ९ | ४ | ५३७ |
| नमः शर्वाय च पशुपतये च | ४ | ५ | ५ | २ | ४ | ५२९ |
| नमः शष्प्याय च फेन्याय च | ४ | ५ | ८ | १६ | ४ | ५३७ |
| नमः शिवाय च शिवतराय च | ४ | ५ | ८ | ११ | ४ | ५३७ |
| नमः शीघ्रियाय च शीभ्याय च ... | ४ | ५ | ५ | १३ | ४ | ५३० |
| नमः शुष्क्याय च हरित्याय च ... | ४ | ५ | ९ | ९ | ४ | ५४० |
| नमः शूराय चावभिन्दते च | ४ | ५ | ६ | १२ | ४ | ५३२ |
| नमः श्रवाय च प्रतिश्रवाय च ... | ४ | ५ | ६ | १० | ४ | ५३२ |
| नमः श्रुताय च श्रुतसेनाय च | ४ | ५ | ६ | १५ | ४ | ५३२ |
| नमः श्लोक्याय चावसान्याय च ... | ४ | ५ | ६ | ८ | ४ | ५३२ |
| नमः श्वभ्यः श्वपतिभ्यश्च ... | ४ | ५ | ४ | १७ | ४ | ५२७ |
| नमः सदसे नमः सदसस्पतये | ३ | २ | ४ | १६ | ३ | ९९ |
| नमः सभाभ्यः सभापतिभ्यश्च | ४ | ५ | २ | १६ | ४ | ५२२ |

| मन्त्रः | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| नराशꣳसस्याहं देवयज्यया ... | १ | ६ | ४ | २ | १ | ८७६ |
| नवदशभिरस्तुवत शूद्रार्यावसृज्येताम् | ४ | ३ | १० | १० | ४ | ३७१ |
| नवभिरस्तुवत पितरोऽसृज्यन्त ... | ४ | ३ | १० | ५ | ४ | ३७१ |
| नवविꣳशत्यास्तुवत वनस्पतयो ... | ४ | ३ | १० | १५ | ४ | ३७१ |
| न वा उवेतन्म्रियसे न ... ... | ४ | ६ | ९ | १० | ४ | ६६५ |
| नवोनवो भवति जायमानोऽह्नां ... | २ | ४ | १४ | १ | २ | ५३८ |
| नाकः षट्त्रिꣳशः ... ... ... | ४ | ३ | ८ | १६ | ४ | ३५५ |
| नाकसदसि ... ... ... ... | ४ | ४ | ७ | १० | ४ | ४६८ |
| नाथितवन्मा व्यथितम् ... ... | १ | २ | १२ | ४ | १ | ४१० |
| नाना प्राणो यजमानस्य पशुना ... | ३ | १ | ४ | ८ | ३ | २२ |
| नाभा पृथिव्याः समिधानमग्निꣳ ... | ४ | १ | १० | ४ | ४ | १२७ |
| नारीस्ते पत्नयो लोम वि चिन्वन्तु | ५ | २ | ११ | ५ | ५ | ५६ |
| नाहमिन्द्राणि रारण ... ... | १ | ७ | १३ | ४ | १ | १०६० |
| निकायश्छन्दः ... ... ... ... | ४ | ३ | १२ | २० | ४ | ३९० |
| नि काव्या वेधसः शश्वतस् ... ... | २ | २ | १२ | ८ | २ | ३७१ |
| नि काव्या वेधसः शश्वतस् ... ... | २ | ३ | १४ | २ | २ | ४६५ |
| निक्रमणं निषदनं विवर्त्तनं ... ... | ४ | ६ | ९ | ३ | ४ | ६६४ |
| निग्राभ्याः स्थ देवश्रुत आयुर्मे ... | ३ | १ | ८ | १ | ३ | ४५ |
| निम्रुक्तिमरूपेण ... ... ... | ५ | ७ | १९ | ८ | ५ | ३४७ |
| निरस्तं नमुचेः शिरः ... ... | १ | ८ | १४ | ५ | २ | १४७ |
| निर्ऋतिं निर्जाल्मकेन शीर्ष्णा ... | ५ | ७ | १२ | ११ | ५ | ३४१ |
| निर्ऋतिमस्थभिः ... ... ... | ५ | ७ | १८ | २ | ५ | ३४६ |
| निर्दग्धꣳ रक्षो निर्दग्धा ... ... | १ | १ | ७ | ६ | १ | १२७ |
| निर्दैवं निर्वीरं कृत्वा विष्कन्धं ... | ७ | ३ | ११ | २ | ६ | ३६२ |
| निलिम्पा नाम स्थ ०—० दधामि... | ५ | ५ | १० | ९ | ५ | १७६ |

## प

| मन्त्रः | का । प्र । ख । म | भा | पृ |
|---|---|---|---|
| प्रजापतिर्जयानिन्द्राय वृष्णे ... | ३ । ४ । ४ । १३ | ३ | २५४ |
| प्रजापतिर्मनसान्धोऽच्छेतो ... | ४ । ४ । ९ । १ | ४ | ४७६ |
| प्रजापतिर्विश्वकर्मा मनो गन्धर्वः ... | ३ । ४ । ७ । ५ | ३ | २६२ |
| प्रजापतिस्त्वा सादयतु ... | ४ । २ । ९ । २ | ४ | २६५ |
| प्रजापतिस्त्वा सादयतु ... | ४ । ४ । ६ । ३ | ४ | ४५९ |
| प्रजापते न त्वदेतान्यन्यो विश्वा ... | १ । ८ । १४ । १२ | २ | १४८ |
| प्रजापते न त्वदेतान्यन्यो विश्वा ... | २ । २ । १२ । ३ | २ | ३७१ |
| प्रजापते न त्वदेतान्यन्यो विश्वा ... | ३ । २ । ५ । १ | ३ | १०६ |
| प्रजापतेर्जायमानाः प्रजा ... | ३ । १ । ४ । १ | ३ | २१ |
| प्रजापतेर्भागोऽस्यूर्जस्वान् ... | १ । ६ । ३ । ७ | १ | ८७० |
| प्रजापतेर्विभान्नाम ... | १ । ६ । ५ । २ | १ | ८८२ |
| प्रजापते स वेद सोमापूषणे ... | २ । ६ । ११ । २० | २ | ८०५ |
| प्रजापतेस्तपसा वावृधानः ... | ५ । १ । ११ । ११ | ५ | २५ |
| प्रजाभ्यस्त्वा प्रजापतये ... | ३ । ३ । ६ । ९ | ३ | १९५ |
| प्रजाभ्यस्त्वा प्राणाय त्वा ... | १ । २ । ६ । ३ | १ | ३४६ |
| प्रजास्त्वमनुप्राणिहि ... | १ । २ । ६ । ६ | १ | ३४६ |
| प्र णो देवी सरस्वती वाजेभिर् ... | १ । ८ । २२ । ३ | २ | २२० |
| प्र णो देवी सरस्वती वाजेभिर् ... | २ । ५ । १२ । ७ | २ | ६६७ |
| प्र णो देवी सरस्वती वाजेभिर् ... | ३ । १ । ११ । ९ | ३ | ६५ |
| प्र णो यच्छत्वर्यमा प्र भगः ... | १ । ७ । १० । ५ | १ | १४४ |
| प्रतङ्कासि नभस्वान् ... | १ । ३ । ३ । ११ | १ | ४६५ |
| प्र तत्ते अद्य शिपिविष्ट ... | २ । २ । १२ । १८ | २ | ३७२ |
| प्रतिक्रमणं कुष्ठाभ्यां ... | ५ । ७ । १५ । ११ | ५ | ३४३ |
| प्रति त्यन्नाम राज्यमधायि ... | १ । ८ । १० । ५ | २ | ११३ |
| प्रति त्वा वर्षवृद्धं वेत्तु ... | १ । १ । ५ । १३ | १ | १०३ |

| मन्त्रः | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| प्रतिदृङ् च ... ... ... ... | १ | ८ | १३ | ६ | २ | १३८ |
| प्रतिधिरसि पृथिव्यै त्वा ... ... | ४ | ४ | १ | ५ | ४ | ४१४ |
| प्रतिमा छन्दः ... ... ... | ४ | ३ | ७ | ३ | ४ | ३५० |
| प्रतियुतो वरुणस्य पाशः ... ... | १ | ४ | ४५ | ६ | १ | ७१२ |
| प्रतिष्ठा त्रयस्त्रिꣳशः ... ... | ४ | ३ | ८ | १४ | ४ | ३५५ |
| प्रति स्पशो विसृज तूर्णितमो ... | १ | २ | १४ | ३ | १ | ४३३ |
| प्रतीची दिशां वर्षा ऋतूनां ... | ४ | ३ | ३ | ३ | ४ | ३२१ |
| प्रतीच्या त्वा दिशा सादयामि ... | ५ | ५ | ८ | ६ | ५ | १६५ |
| प्रतीच्यां दिशि गृहाः पशवो ... | १ | ६ | ५ | ६ | १ | ८८३ |
| प्रतूर्त्तं वाजिन्नाद्रव वरिष्ठाम् ... | ४ | १ | २ | २ | ४ | १५ |
| प्रतूर्त्तिरष्टादशः ... ... ... | ४ | ३ | ८ | ४ | ४ | ३५५ |
| प्र तूर्वन्नेह्यवक्रामन्नशस्ती ... ... | ४ | १ | २ | ५ | ४ | १५ |
| प्र ते यक्षि प्र त इयर्मि ... ... | २ | ५ | १२ | २५ | २ | ६६८ |
| प्रत्यस्तो वरुणस्य पाशः ... ... | १ | २ | ८ | १० | १ | ३६१ |
| प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ... | १ | १ | २ | २ | १ | ४९ |
| प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ... | १ | १ | ४ | ३ | १ | ८४ |
| प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयः ... | १ | १ | १० | १ | १ | १६७ |
| प्रथमा वाꣳ सरथिना सुवर्णा ... | ५ | १ | ११ | ७ | ५ | २४ |
| प्र दातारꣳ हवामह इन्द्रमा ... | १ | ७ | १३ | ६ | १ | १०६० |
| प्र दाता वज्री वृषभस्तुराषाट् ... | १ | ७ | १३ | १० | १ | १०६० |
| प्रदिशः स्वाहा ... ... ... | १ | ३ | १० | ७ | १ | ५३१ |
| प्र देवं देववीतये भरता ... ... | ३ | ५ | ११ | १६ | ३ | ३६४ |
| प्र देवं देव्या धिया भरता ... ... | ३ | ५ | ११ | १ | ३ | ३६२ |
| प्र पूर्वजे पितरा नव्यसीभिर् ... | ४ | १ | ११ | १८ | ४ | १४३ |
| प्र प्रायमग्निर्भरतस्य शृण्वे ... ... | २ | ५ | १२ | २४ | २ | ६६८ |

## फ



## ब

# भ

## म

# य

## र

| मन्त्रः | का । | प्र । | अ । | म | भा | पृ |
|---|---|---|---|---|---|---|
| रुद्रस्त्वाऽऽवर्त्तयतु मित्रस्य ... ... | १ । | २ । | ४ । | ९ | ... १ | ... ३२० |
| रुद्रस्य विचलः स्कन्धः ... ... | ५ । | ७ । | १८ । | ४ | ... ५ | ... ३४६ |
| रुद्रस्य षष्ठी ... ... ... ... | ५ । | ७ । | २२ । | ६ | ... ५ | ... ३५० |
| रुद्रस्य हेतिः परि वो वृणक्तु ... | १ । | १ । | १ । | ६ | ... १ | ... १३ |
| रुद्राः सम्भृत्य पृथिवीं ... ... | ४ । | १ । | ५ । | ७ | ... ४ | ... ६६ |
| रुद्राणां द्वितीया ... ... ... | ५ । | ७ । | १७ । | ७ | ... ५ | ... ३४५ |
| रुद्रा देवता ... ... ... ... | ४ । | ३ । | ७ । | ३० | ... ४ | ... ३५० |
| रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ ... | १ । | ७ । | ११ । | १४ | ... १ | ...१०५२ |
| रुद्रासि ... ... ... ... | १ । | २ । | ५ । | २ | ... १ | ... २३९ |
| रुद्रास्त्वा छृणवन्तु त्रैष्टुभेन ... ... | ४ । | १ । | ५ । | १४ | ... ४ | ... ६७ |
| रुद्रास्त्वा छृणवन्तु त्रैष्टुभेन ... ... | ४ । | १ । | ६ । | २० | ... ४ | ... ७९ |
| रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन ... ... | ४ । | १ । | ६ । | २ | ... ४ | ... ७८ |
| रुद्रास्त्वा परि गृह्णन्तु ... ... | १ । | १ । | ९ । | १० | ... १ | ... १४७ |
| रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन ... | ३ । | ३ । | ३ । | २ | ... ३ | ... १७६ |
| रुद्रेभ्यस्त्वा ... ... ... ... | १ । | १ । | १३ । | ४ | ... १ | ... २२५ |
| रूपमसि वर्णो नाम बृहस्पतेः ... | ३ । | ३ । | ५ । | ३ | ... ३ | ... १८८ |
| रूपेण वो रूपमभ्यैमि ... ... | १ । | ४ । | ४३ । | ५ | ... १ | ... ६९३ |
| रेवती नक्षत्रं पूषा देवता ... ... | ४ । | ४ । | १० । | २५ | ... ४ | ... ४८२ |
| रेवती रमध्वमस्मिन् लोके ... | १ । | ५ । | ६ । | ३ | ... १ | ... ७९७ |
| रेवतीर्नः सधमाद इन्द्रे सन्तु ... | १ । | ७ । | १३ । | १३ | ... १ | ...१०६१ |
| रेवतीर्नः सधमाद इन्द्रे सन्तु ... | २ । | २ । | १२ । | २९ | ... २ | ... ३७३ |
| रेवतीर्नः सधमाद इन्द्रे सन्तु ... | २ । | ४ । | १४ । | १० | ... २ | ... ५३९ |
| रेवतीर्यज्ञपतिं प्रियधा विशत ... | १ । | ३ । | ८ । | ११ | ... १ | ... ५१० |
| रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व ... | ४ । | ४ । | १ । | १५ | ... ४ | ... ४१४ |
| रेवाꣳ इन्द्रेवतः स्तोता स्यात् ... | २ । | २ । | १२ । | ३० | ... २ | ... ३७३ |

| मन्त्रः | का । प्र । ख । म | भा | पृ |
|---|---|---|---|
| वसुमान् यज्ञो वसीयान् भूयासम् | १ । ६ । ६ । ८ | १ | ८८८ |
| वसुरग्निर्वसुश्रवाः ... ... ... | १ । ५ । ६ । १० | १ | ७९८ |
| वसुरग्निर्वसुश्रवाः ... ... ... | ४ । ४ । ४ । २९ | ४ | ४३९ |
| वसुर्वसुपतिर्हिकमस्यग्ने ... ... | १ । ४ । ४६ । ७ | १ | ७५८ |
| वसूनाꣳ रुद्राणामादित्यानाꣳ ... | १ । १ । ११ । १६ | १ | १९४ |
| वसूनां पवित्रमसि ... ... ... | १ । १ । ३ । ३ | १ | ६५ |
| वसूनां प्रथमा कीकसा ... ... | ५ । ७ । १७ । ६ | ५ | ३४५ |
| वसूनां भागोऽसि रुद्राणामाधिपत्यं | ४ । ३ । ९ । ६ | ४ | ३६२ |
| वस्त्रमसि मम भोगाय भव... ... | १ । २ । ३ । १० | १ | ३१० |
| वस्व्यसि ... ... ... ... | १ । २ । ५ । १ | १ | ३३९ |
| वस्व्यष्टिरसि ... ... ... ... | ४ । ४ । १ । ३१ | ४ | ४१५ |
| वह्निरसि हव्यवाहनः ... ... | १ । ३ । ३ । २ | १ | ४६५ |
| वाक् छन्दः ... ... ... ... | ४ । ३ । ७ । ३९ | ४ | ३५० |
| वाक्त आप्यायताम् ... ... ... | १ । ३ । ९ । १ | १ | ५२४ |
| वाक्पतिस्त्वा पुनातु... ... ... | १ । २ । १ । १३ | १ | २७२ |
| वागस्यैन्द्री सपत्नक्षयणी ... ... | १ । ६ । २ । १३ | १ | ८५९ |
| वाग्यज्ञेन कल्पताम्... ... ... | १ । ७ । ९ । २५ | १ | १०३५ |
| वाचं प्राणं ... ... ... ... | १ । १ । १० । ४ | १ | १६७ |
| वाचं मे पिन्व... ... ... ... | ४ । ३ । ६ । १५ | ४ | ३४४ |
| वाचस्पतये पवस्व वाजिन् ... ... | १ । ४ । २ । १ | १ | ५९३ |
| वाचस्पतिं विश्वकर्माणमूतये ... | ४ । ६ । २ । १४ | ४ | ५८० |
| वाचि स्वाहा... ... ... ... | १ । १ । १३ । १९ | २ | २२५ |
| वाचो विधृतिमग्निं प्रयुजं ... ... | ४ । १ । ९ । ४ | ४ | ११३ |
| वाजꣳ हनूभ्याम् ... ... ... | ५ । ७ । १२ । १ | ५ | ३३९ |
| वाजः पुरस्तादुत मध्यतो नो ... | ४ । ७ । १२ । ५ | ४ | ६९९ |

| मन्त्रः | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| विष्टम्भाय धर्मणे स्वाहा वट् ... | ३ | २ | ८ | २ | ३ | १३६ |
| विष्टम्भो दिवो धरुणः पृथिव्या ... | ४ | ४ | १२ | १४ | ४ | ४९९ |
| विष्टम्भो वयोऽधिपतिश्छन्दः ... | ४ | ३ | ५ | १६ | ४ | ३३८ |
| विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं ... | ४ | ४ | १ | ६ | ४ | ४१४ |
| विष्टारपङ्क्तिश्छन्दः ... ... ... | ४ | ३ | १२ | ३२ | ४ | ३९० |
| विष्णावुरुक्रमैष ते सोमस्तꣳ ... | ३ | २ | १० | ७ | ३ | १५७ |
| विष्णुरुपावक्रियमाणः ... ... | ४ | ४ | ९ | १६ | ४ | ४७६ |
| विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत् | १ | ७ | ११ | ३ | १ | १०५२ |
| विष्णुस्त्वा धूपयत्वङ्गिरस्वत् ... ... | ४ | १ | ६ | ६ | ४ | ७८ |
| विष्णोः कर्माणि पश्यत ... ... | १ | ३ | ६ | १२ | १ | ४९१ |
| विष्णोः क्रमोऽसि ... ... ... | १ | ८ | १० | ७ | २ | ११३ |
| विष्णोः क्रमोऽसि ... ... ... | १ | ८ | १५ | ३ | २ | १५६ |
| विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि | १ | ७ | ७ | ७ | १ | ९८९ |
| विष्णोः क्रमोऽसि शत्रूयतो ... | १ | ९ | ५ | १२ | १ | ८८३ |
| विष्णोः क्रमोऽसि शत्रूयतो ... | ४ | २ | १ | ४ | ४ | १५२ |
| विष्णोः क्रमोऽस्यभिमातिहा ... | १ | ६ | ५ | ९ | १ | ८८३ |
| विष्णोः क्रमोऽस्यभिमातिहा ... | ४ | २ | १ | १ | ४ | १५२ |
| विष्णोः क्रमोऽस्यभिशस्तिहा ... | १ | ६ | ५ | १० | १ | ८८३ |
| विष्णोः क्रमोऽस्यभिशस्तिहा ... | ४ | २ | १ | २ | ४ | १५२ |
| विष्णोः क्रमोऽस्यरातीयतो ... | १ | ६ | ५ | ११ | १ | ८८३ |
| विष्णोः क्रमोऽस्यरातीयतो ... | ४ | २ | १ | ३ | ४ | १५२ |
| विष्णोः क्रान्तमसि ... ... ... | १ | ८ | १० | ८ | २ | ११३ |
| विष्णोः क्रान्तमसि ... ... ... | १ | ८ | १५ | ४ | २ | १५६ |
| विष्णोः पृष्ठमसि ... ... ... | १ | २ | १३ | ११ | १ | ४२२ |
| विष्णोः शंयोरहं देवयज्यया ... | १ | ६ | ४ | १९ | १ | ८७६ |

## श

| मन्त्रः | का । प्र । अ । म | भा | पृ |
|---|---|---|---|
| संयच्च प्रचेताश्चाग्नेः ... ... ... | ४ । ४ । ११ । १३ | ४ | ४८७ |
| संयच्छन्दः ... ... ... ... | ४ । ३ । १२ । १६ | ४ | ३९० |
| सं यज्ञैरङ्गानि ... ... ... | १ । ३ । ८ । ८ | १ | ५१० |
| सं यज्ञपतिराशिषा ... ... | १ । ३ । ८ । ९ | १ | ५१० |
| सं यदिषो वनामहे सꣳ हव्या ... | २ । १ । ११ । १३ | २ | ३२४ |
| सं वा वः प्रियाल्लुवः ... ... | ४ । २ । ४ । ४ | ४ | १८८ |
| सꣳरोहोऽसि ... ... ... | ४ । ४ । १ । २५ | ४ | ४१५ |
| संवत्सरस्य प्रतिमां यां त्वा ... | ५ । ७ । २ । ३ | ५ | २८२ |
| संवत्सरस्य चक्षुः ... ... ... | ५ । ७ । १८ । ९ | ५ | ३४६ |
| संवत्सरस्य चक्षी ... ... ... | ५ । ७ । २१ । ६ | ५ | ३४९ |
| संवत्सरीणा मरुतः स्वर्का ... ... | ४ । ३ । १३ । १२ | ४ | ३९७ |
| संवत्सरेण परिभुः... ... ... | ४ । ४ । ८ । २० | ४ | ४७३ |
| सं वपामि ... ... ... ... | १ । १ । ८ । १ | १ | १३५ |
| सं वर्चसा पयसा सं तनूभिर् ... | १ । ४ । ४४ । ३ | १ | ७०५ |
| सं वरत्रा दधातन निरोहावान् ... | ४ । २ । ५ । १३ | ४ | २०३ |
| सं वसाथाꣳ सुवर्विदा समीची ... | ४ । १ । ३ । ५ | ४ | ३७ |
| सं वां कर्मणा समिषा हि नो ... | ३ । २ । ११ । ४ | ३ | १६१ |
| संवदसि ... ... ... ... | ४ । ४ । १ । २३ | ४ | ४१५ |
| संवेशाय त्वोपवेशाय त्वा ... ... | ३ । १ । ७ । ४ | ३ | ३८ |
| सꣳशितं मे ब्रह्म सꣳशितं ... | ४ । १ । १० । ९ | ४ | १२७ |
| सꣳ समिद् युवसे वृषन्नग्ने ... ... | २ । ६ । ११ । १९ | २ | ८०५ |
| सꣳ समिद् युवसे वृषन्नग्ने... ... | ४ । ४ । ४ । १२ | ४ | ४३८ |
| सꣳसर्पोऽसि चक्षुषे त्वा ... ... | ४ । ४ । १ । १९ | ४ | ४१५ |
| सꣳ सीदस्व महाꣳ असि ... ... | ४ । १ । ३ । १२ | ४ | ३८ |
| सꣳसृष्टां वसुभीरुद्रैर्धीरैः ... ... | ४ । १ । ५ । ८ | ४ | ६६ |

| मन्त्रः | का। | प्र। | अ। | म | भा | पृ |
|---|---|---|---|---|---|---|
| समापो अद्भिरग्मत ... ... | १ | १ | ८ | २ | १ | १३५ |
| समायुषा सम्प्रजया ... ... ... | १ | १ | १० | १० | १ | १६७ |
| समारभ्योर्ध्वो अध्वरो ... ... | १ | १ | १२ | ६ | १ | २०४ |
| समाववृत्रन्नधरागुदीचीरहिं ... | १ | ८ | १४ | १० | २ | १४८ |
| समास्कन्दः ... ... ... ... | ४ | ३ | ७ | १६ | ४ | ३५० |
| समास्त्वाग्न ऋतवो वर्द्धयन्तु ... | ४ | १ | ७ | १ | ४ | ८७ |
| समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ ... | ४ | २ | ५ | १ | ४ | २०२ |
| समित् स्रवन्ति सरितो न धेनाः ... | ४ | २ | ९ | २४ | ४ | २९६ |
| समिदसि ... ... ... ... | १ | ४ | ४५ | ११ | १ | ७१२ |
| समिद्दिशामाशया नः ... ... | ४ | ४ | १२ | १ | ४ | ४६७ |
| समिद्धो अग्ने मे दीदिहि ... ... | १ | ६ | ६ | ७ | १ | ८८८ |
| समिधमातिष्ठ गायत्री त्वा ... ... | १ | ८ | १३ | १ | २ | १३७ |
| समिधाग्निं दुवस्यत ... ... ... | ४ | २ | ३ | ४ | ४ | १७६ |
| समिन्द्र णो मनसा नेषि गोभिः ... | १ | ४ | ४४ | २ | १ | ७०५ |
| समीची नामासि प्राची दिक् ... | ५ | ५ | १० | १ | ५ | १७५ |
| समीद्धो अञ्जन् कृदरं मतीनां ... | ५ | १ | ११ | १ | ५ | २४ |
| समुद्रं गच्छ स्वाहा ... ... ... | १ | ३ | ११ | १ | १ | ५४७ |
| समुद्रं छन्दः ... ... ... ... | ४ | ३ | १२ | १४ | ४ | ३९० |
| समुद्रमुदरेण ... ... ... | ५ | ७ | १६ | ९ | ५ | ३४४ |
| समुद्रस्य त्वाऽवाकयाग्ने ... ... | ४ | ६ | १ | ३ | ४ | ५६३ |
| समुद्रस्य वोक्षित्या उन्नये ... ... | १ | ३ | १३ | ६ | १ | ५५९ |
| समुद्राय वयुनाय ... ... ... | ४ | ६ | २ | १७ | ४ | ५८१ |
| समुद्रे ते हृदयमप्स्वन्तः ... ... | १ | ४ | ४५ | ५ | १ | ७११ |
| समुद्रे त्वा नृमणा अप्स्वन्तर् ... | ४ | २ | २ | ३ | ४ | १९९ |
| समुद्रे सदने सीद ... ... ... | ४ | ३ | १ | ७ | ४ | ३०९ |

